## लिङ्गस्थूलीकरणसमुद्देशः ।

सकुष्ठमातङ्गबलाबलानां वचाश्वगन्धागजपिप्पलीनाम् ।
तुरङ्गशत्रोर्नवनीतयोगाल्लेपेन लिङ्गं मुशलत्वमेति ॥ ४३ ॥
सरोध्रकाशीशतुरङ्गगन्धामातङ्गगन्धापरिपाचितेन ।
तैलेन वृद्धिं खलु यान्ति शीघ्रं वराङ्गकर्णस्तनमेहनानि ॥ ४४ ॥

## अथ ध्वजदृढीकरणसमुद्देशः ।

हयारिपत्रं नवनीतपिष्टं वचाबलानागबलामयैश्च ।
लेपेन लिङ्गं सहसैव पुंसां लोहोपमं स्यादिति दृष्टमेतत् ॥४५॥

## अथ वीर्यस्तम्भनसमुद्देशः ।

क्षीरेण बस्तस्य[1] च बद्धमूलं लज्जालुमूलं स्वयमेव पिष्ट्वा ।
यस्तु स्वपादौ परिलिप्य शेते रेतो न तस्य स्रवते कदाचित् ॥४६॥
श्वेतेषुपुङ्खाख्यतरोः फलानि क्षीरेण पिष्ट्वा वटपादपस्य ।
करञ्जबीजोदरमध्यगानि बध्नन्ति वीर्यं वदने धृतानि ॥ ४७ ॥
श्वेतेषुपुङ्खाचरणं गृहीत्वा पुष्यार्कयोगे पुरुषस्य कट्याम् ।
कुमारिकाकर्तितसूत्रकेण बद्धं न यात्याशु मनोजनीरम् ॥ ४८ ॥
आदाय कृष्णेतरकाकजङ्घामूलं सिताम्भोरुहकेशरं च ।
क्षौद्रेण पिष्ट्वा परिलिप्तनाभेः स्तम्भं प्रयात्याशु नरस्य बीजम् ।४९।

## अथ वशीकरणतिलकसमुद्देशः ।

मञ्जिष्ठतोयदवचासितभानुमूलैः
स्त्रीयाङ्गशोणितयुतैः समकुष्ठकैश्च ।
कृत्वा ललाटफलके तिलकं कृतज्ञो
लोकत्रयं वशयति क्षणमात्रकेण ॥ ५० ॥

## अथ वशीकरणाञ्जनसमुद्देशः ।

देवीमहोत्सवदिने किल कज्जलं यत्
सिद्धार्थकस्य सुरसेन[2] नरोत्तमाङ्गे ।

---

१ बस्तस्येति जातिपरं, तेन अजाक्षीरमत्र ग्राह्यम् । २ सुरसेन तैलेन ।

निष्पातितं नरवरेण निशि श्मशाने
तन्नेत्रगं भुवनमेव वशं करोति ॥ ५१ ॥

अथ वशीकरणचूर्णसमुद्देशः ।

कुष्ठोत्पलं मधुकरस्य च पत्रयुग्मं
मूलं तथा तगरजं सितकाकजङ्घा ।
यस्याः शिरोगतमिदं विहितं तु चूर्णं
दासीभवेज्झटिति सा तरुणी न चित्रम् ॥ ५२ ॥

अथ वशीकरणलेपनसमुद्देशः ।

सव्येन पाणिकमलेन रतावसाने
यो रेतसा निजभवेन विलासदक्षः ।
वामं विलिम्पति पदं सहसैव यस्या-
स्तस्यैव सा भवति नात्र विकल्पभावः ॥ ५३ ॥
सम्भोगशेषसमये निजकान्तमेढ्रं
या कामिनी स्पृशति वामपदाम्बुजेन ।
तस्याः पतिः सपदि विन्दति दासभावं
गोणीसुतेन कथितः किल योगराजः ॥ ५४ ॥
सिन्धूत्थमाक्षिककपोतमलानि पिष्ट्वा
लिङ्गं विलिप्य तरुणीं रमते नरो यः ।
साऽन्यं प्रयाति पुरुषं न कदाऽपि कामं
दासीभवेदतिमनोहरदिव्यमूर्तिः ॥ ५५ ॥
भल्लूकमेढ्रघनसारमधूनि पिष्ट्वा
लिप्तध्वजो निधुवनं विदधीत यस्याः ।
साऽऽह्लादिनी कुसुमसायकसन्नताङ्गी
वश्या भवेच्चिरतरं न हि संशयोऽत्र ॥ ५६ ॥
गोरोचनाशिशिरदीधितिशम्भुबीज-
काश्मीरचन्दनयुतैः कनकद्रवेण ।

लिप्तध्वजः परिरमत्यबलां नरो य-
स्तस्याः स एव हृदये मुकुटत्वमेति ॥ ५७ ॥

अथ वशीकरणधूपसमुद्देशः ।

भृङ्गीवचायुवतिसर्जरसं समानं
कृत्वा त्रुटिं मलयजं च षडेव मिश्रम् ।
यो धूपयेन्निजगृहं वसनं शरीरं
तस्यापि दास इव मोहमुपैति लोकः ॥ ५८ ॥

अथ वशीकरणमन्त्रसमुद्देशः ।

मदमदपदमादौ मादयेति द्विवारं
तदनु च लिखनीयं सौख्यदं ह्रीं च तस्मात् ।
अथ च पदमुपान्ते नामरूपादिसंज्ञो
भवति मदनमन्त्रः स्वाहया संयुतोऽयम् ॥ ५९ ॥

'ॐ मद मद मादय मादय ह्रीं अमुकीं वशमानय स्वाहा'

शतशतपरिजापात् स्यादयं सिद्धिदाता
दशदशकुसुमानां लोहितानां च होमात् ।
इह तु सकलकार्यं वामहस्तेन कार्य-
मुपदिशति समासाज्ज्योतिरीशः स्वरूपम् ॥ ६० ॥

अस्य मन्त्रस्य दशसहस्रसङ्ख्याकोन्मितो जपः, रक्तवर्णैः प्रसूनैर्मधुना घृतेन च होमः करणीयः । सर्वं वामहस्तेन कर्तव्यम् । अथ ध्यानम्—

कनकरुचिरमूर्तिः कुण्डलाकृष्टचापो
युवतिहृदयमध्ये निश्चलारोपिताक्षः[1] ।
इति मनसि मनोजं ध्याययेद्यो जपस्थो
वशयति स समस्तं भूतलं मन्त्रशक्त्या ॥ ६१ ॥

अथ चामुण्डमन्त्रः ।

चामुण्डे प्रथमं जयेति कथितं संबोधनं मोहय
ज्ञातव्यं वशमानयेति च पदं साध्यं द्वितीयायुतम् ।

---

१ 'स्फुरति हृदयमध्ये निश्चितारोपिताक्षः' इति ग. ।

स्वाहान्तः प्रणवादिरेष प्रथितस्तन्त्रे महामोहनः
सन्मन्त्रः कविशेखरेण कथितो नास्माद्द्वितीयो भुवि ॥ ६२ ॥

'ॐ चैामुण्डे जय चामुण्डे मोहय अमुकीं वशमानय स्वाहा' इति मन्त्रः । अस्य मन्त्रस्य जप एकलक्षमितः, पलाशकुसुमैर्होमः दशांशं, सर्वं वामहस्तेन कर्तव्यम् । अथ चामुण्डाया ध्यानम्—

दंष्ट्राकोटिविसङ्कटा सुवदना सान्द्रान्धकारे स्थिता
खट्वाङ्गासिनिगूढदक्षिणकरा वामे सपाशं शिरः ।
श्यामा पिङ्गलमूर्धजा भयकरी शार्दूलचर्माम्बरा
चामुण्डा शववाहिनी जपविधौ ध्येया सदा साधकैः॥६३॥

अथ विश्वेश्वरीमन्त्रः ।

ओङ्कारः प्रथमं नमो नम इति प्रोक्तं च तस्मात्पदं
चामुण्डे परिकीर्तितं हिलि हिलि ज्ञेया च संज्ञा ततः ।
ज्ञातव्यं तु समानयेति च पदं सन्मन्त्रिणां संमतो
मन्त्रोऽयं कविशेखरेण कथितः ख्यातः सदा सिद्धिदः ६४

'ॐ नमो नमश्चामुण्डे हिली हिलि अमुकीं वशमानय स्वाहा'

अस्य मन्त्रस्य जप एकलक्षपरिमितः, तद्दशांशैः पलाशकुसुमैर्होमः करणीयः, सर्वं वामहस्तेन कर्तव्यम् ॥

अथ विश्वेश्वरीध्यानम् ।

वज्रासक्तशरासना त्रिनयना सव्येतरेणाङ्कुशं
वामेनापि करेण पाशमुरसि न्यस्तोत्तमाङ्गस्रजा ।
व्यामुक्तोरुकचा करालवदना वह्निप्रभा मध्यगा
ध्येया जापविधौ नरैरिति सदा विश्वेश्वरी सिद्धये ॥६५॥

अथ पद्मिनीवशीकरणमन्त्रः ।

'ॐ कामेश्वर ! मोहय स्वाहा' इति मन्त्रः । अनेन मन्त्रेण मधुमिश्रितजातिकुसुमसहितं ताम्बूलमादित्यदिने सहस्रवारमभिमन्त्रितं पद्मिन्यै दातव्यम् । पद्मिनी वश्या भवति ॥

१ 'चामुण्डे मोहय मोहय' इति ग. ।

अथ चित्रिणीवशकरणमन्त्रः ।

'ॐ पचे पच ॐ विहङ्गम विहङ्गम ॐ कामदेवाय स्वाहा' इति मन्त्रः। अनेन मन्त्रेण रम्भामूलजलभावितजातीफलमिलितताम्बूलमादित्यदिने पञ्चशतवारमभिमन्त्रितं चित्रिण्यै दातव्यम्। चित्रिणी वश्या भवति ॥

अथ शङ्खिनीवशीकरणमन्त्रः ।

'ॐ हर हर ॐ पच पच कामदेवाय स्वाहा' इति मन्त्रः। अनेन मन्त्रेण तरगमूलं श्रीफलञ्चादित्यवारे अष्टोत्तरशतवारमभिमन्त्रितं शङ्खिन्यै दातव्यम् । सा वश्या भवति ॥

अथ हस्तिनीवशीकरणमन्त्रः ।

'ॐ चिरि चिरि वशं कुरु कामदेवाय स्वाहा' इति मन्त्रः। अनेन मन्त्रेण आदित्यदिने क्षौद्राक्तौ कपोतभ्रमरपक्षौ ताम्बूलदले विन्यस्य अष्टोत्तरशतमभिमन्त्रितं कृत्वा हस्तिन्यै देयम् । हस्तिनी वश्या भवति ॥

अथ अनिच्छाहरणोपायनिरूपणम् ।

क्षीरोदनं द्विजवराय पुरा प्रदद्यात्
पुष्योद्धृतं सितबलाचरणं कुमार्या ।
पिष्टं प्रदत्तमिति वैरकृतामनिच्छां
निःसारयेदिह मुहुर्विदितप्रभावः ॥ ६६ ॥

अथ स्तनोत्थापनसमुद्देशः ।

मातङ्गकृष्णामयवाजिगन्धा वचायुताः पर्युषिताम्बुमिश्राः ।
हयारिपत्रीनवनीतयोगात् कुर्वन्ति पीनं कुचकुम्भयुग्मम् ॥ ६७॥
वसा भुजङ्गस्य हयारिपत्रं कोलस्य मेदः समभागयुक्ताः ।
वक्षोजकुम्भं मदिरायताक्ष्याः कुर्वन्ति पीनं सकलं हठेन ॥६८॥
तैलं हठाद्दाडिमकल्कसिद्धं सिद्धार्थजं लेपनतो नितान्तम् ।

१ 'ॐ पठ पठ' ग. ।

नारीस्तनौ चारुतरौ सुपीनौ कुर्यादसौ योगवरः सदैव ॥६९॥
श्रीपर्णिकाया रसकल्कसिद्धं तिलोद्भवं तैलवरं प्रदिष्टम् ।
प्रोतेन वक्षोजयुगे प्रदेयं प्रयाति वृद्धिं पतितोऽपि नार्याः ॥७०॥

योनिसंस्कारसमुद्देशः ।

प्रक्षालयेन्निम्बकषायनीरैर्निशाज्यकृष्णागुरुगुग्गुलूनाम् ।
धूपेन योनिं निशि धूपयित्वा नारी प्रमोदं विदधाति भर्तुः ॥७१॥
जातीप्रसूनैः सितसर्षपस्य तैलं पचेल्लघ्वनले प्रकामम् ।
अभ्यङ्गयोगेन सदैव योनौ सौभाग्यमाप्नोति रते पुरन्ध्री ॥७२॥

अथ रोमशातनसमुद्देशः ।

भुजङ्गचूर्णं कटुतैलमध्ये सप्ताहमादित्यकरे निधेयम् ।
तत्तैलयोगेन विलासिनीनां नश्यन्ति रोमाणि समूलमेव ॥७३॥
पलाशभस्मान्विततालचूर्णैं रम्भाम्बुमिश्रैरुपलिप्य भूयः ।
कन्दर्पगेहे मृगलोचनानां रोमाणि रोहन्ति कदापि नैव ॥७४॥
रम्भाजले सप्तदिनं विभाव्य भस्मेह कम्बोर्मसृणं च पश्चात् ।
तालेन युक्तं च विलेपनेन रोमाणि निर्मूलयति क्षणेन ॥ ७५ ॥

अथ पुष्पजननसमुद्देशः ।

ज्योतिष्मतीकोमलपत्रमग्नौ भृष्टं जपायाः कुसुमेन पिष्टम् ।
गृहाम्बुना पीतमिदं युवत्या करोति पुष्पं स्मरमन्दिरस्य ॥७६॥

अथ गर्भधारणसमुद्देशः ।

तुरङ्गगन्धाशृतवारिसिद्धमाजं पयः स्नानदिने निपीय ।
प्राप्नोति गर्भं नियमं चरन्ती वन्ध्याऽपि नूनं पुरुषप्रसङ्गात् ।७७।
पुष्योद्धृतं लाक्ष्मणमेव मूलं भर्त्रा निपिष्टं सघृतं च पीतम् ।
क्षीरौदनं प्राश्य पतिप्रसङ्गाद्गर्भं विधत्ते तरुणी न चित्रम् ॥७८॥
या बीजपूरद्रुममूलमेकं क्षीरेण सिद्धं हविषा विमिश्रम् ।
ऋतौ निपीय स्वपतिं प्रयाति दीर्घायुषं सा तनयं प्रसूते ॥७९॥

अथ गर्भसंस्थापनसमुद्देशः ।

कशेरुशृङ्गाटकजीवनाख्यपयोधरैरण्डशतावरीभिः ।

सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ।। ८० ।।

अथ सुखप्रसवसमुद्देशः। अथ सुखप्रसवमन्त्रः–

ॐ इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवा तुरङ्गाणां मन्दिरे निवसन्तु ते ।। ८१ ।।
ॐ इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं विमुञ्चतु स्त्रि ।
तदनलपवनार्कवासरास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ।८२।
ॐ मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येण रश्मयः ।
मुक्तः सर्वभयाद्गर्भ एह्येहि मा चिर स्वाहा ।। ८३ ।।
एभिर्जलं च्यावनमन्त्रराजैर्जप्त्वा प्रदेयं किल गर्भवत्यै ।
सद्यः प्रसूते नवमूढगर्भा योगोऽयमात्रेयमुनिप्रदिष्टः ।। ८४ ।।
एभिर्मन्त्रैः सप्तवारमभिमन्त्रितं जलं गर्भवत्यै पातुं दातव्यम् ।

"ॐ मन्मथ मन्मथ मन्मथवाहिनि ! लम्बोदरं मुञ्च मुञ्च लघु स्वाहा" इति मन्त्रः । अनेन मन्त्रेण सप्तवारमभिमन्त्रितं जलं गर्भवत्यै पातुं दातव्यम् । सुखात् प्रसवो भवति ।।

अथ वन्ध्याकरणसमुद्देशः ।

पलाशक्षीरिद्रुमयोः फलानि पुष्पाण्यथो शाल्मलिपादपस्य ।
मद्येन मासार्धदिनं निपीय वन्ध्या भवेन्निश्चितमेव नारी।।८५।।
फलं कदम्बस्य च माक्षिकं हि तुषोदकेन त्रिदिनं निपीय।
स्नानावसाने नियमेन चापि वन्ध्यामवश्यं कुरुते हठेन ।। ८६ ।।
कर्षद्वयं राक्षसवृक्षबीजं सप्ताहमात्रं सितशालिवारा ।
ऋतौ निपीतं मृगशावकाक्ष्या वन्ध्यात्वमेतन्नियतं करोति ।।८७।।

अथ केशसंस्कारसमुद्देशः ।

तिलप्रसूनं सह गोक्षुरेण ससारघं गव्यघृतेन पिष्टम् ।
सप्ताहमात्रेण शिरःप्रलेपाद्भवन्ति दीर्घाः प्रचुराश्च केशाः ।।८८।।
कर्षार्धमात्रं प्रसवं फलेन निम्बस्य तैलं नियमेन पीतम् ।
क्रमेण कुन्देन्दुतुषारगौरं शिरोरुहं मेचकतामुपैति ।। ८९ ।।

अथ इन्द्रलुप्तसमुद्देशः ।

गुञ्जाफलैः क्षौद्रयुतैर्विलिप्य केशप्रदेशे सकलेन्द्रलुप्तम् ।
अनेन योगेन सदैव केशा रोहन्ति कृष्णाः कुटिला विशालाः ९०

इति श्रीकविशेखरज्योतिरीशविरचिते पञ्चसायके तृतीयः सायकः ।

---

## अथ चतुर्थः सायकः ।



अथ कन्यालक्षणसमुद्देशः ।

प्रख्याते महति प्रभूतविभवे चारित्रशीलान्विते
विद्याधैर्यविवेकशौर्यविभवश्लाघ्ये कुलीने कुले ।
कन्या भ्रातृयुता सुशीलविनया रूपोज्ज्वला दक्षिणा
त्रैवर्गाश्रितशुद्धवंशनिलया सद्भिर्विवाह्या नरैः ॥ १ ॥
अम्भोजास्या बहलनयना भूरिकेशप्रचारा
तुल्या स्निग्धा सुसमदशना पद्मरागाधरौष्ठी ।
रम्यश्रोत्रा मधुरवचना कम्बुकण्ठी शुभाङ्गी
मध्ये क्षीणा सुललितकरा दक्षिणावर्तनाभिः ॥ २ ॥
पीनश्रोणी कनककदलीस्तम्भजङ्घाभिरामा
रक्ताशोकप्रसवचरणा स्निग्धशाखाङ्गुलीका ।
इत्थं युक्ता सुललिततनुर्लक्षणैरुत्तमैर्या
कन्या सद्भिश्चटुलचरिता सा विवाह्या गुणज्ञैः ॥ ३ ॥

अथ कन्यादूषणसमुद्देशः ।

खर्वा पिङ्गलकुन्तला कृशतनुर्दीर्घाऽतिरोमाकुला
कृष्णा सौकरलोचना पृथुगला कृष्णाधरा दन्तुरा ।
रुक्षाङ्गी विकटस्तनी च सबला बभ्रूरवीरात्मजा
वाचाला बहुभोजना च गदिनी प्रौढा च दुःखान्विता ॥४॥
पुष्पक्ष्माधरवृक्षदेशतटिनीनक्षत्रसंज्ञा च या
हास्ये कूपयुगं कपोलयुगले यस्या भवेत् सत्वरम् ।

अङ्गुष्ठाधिकपर्वणी चरणयोर्यस्याश्च जाताऽङ्गुलिः
पादस्यापि कनीनिका न पतति क्ष्मायां तदन्यैव वा ॥ ५ ॥
अज्ञातान्वयजा स्वभावपिशुना लम्बाधरा चञ्चला
कुष्ठिश्वित्रिकुलोद्भवा च वितता यस्याः कठिर्नासिका ।
निन्द्या पल्लवजिह्विका द्रुतगतिर्न्यूनाधिकाङ्गी पुन-
स्त्याज्या कामकलाकलापकुशलैः कन्या विवाहे सदा ॥ ६ ॥

अथ वरलक्षणसमुद्देशः ।

प्रख्यातोऽमलवंशजो[1] नववयाः शूरस्सुशीलश्च यः
स्वाचारः स्थिरसौहृदो गुणनिधिर्नानाकुटुम्बी बली ।
अर्थी भोगरतो विशिष्टवचनो दाक्षिण्यधैर्याश्रयो
जामाता जगतीतले[2] कविवरैरेवंविधो वर्णितः ॥ ७ ॥

अथ वरदूषणसमुद्देशः ।

पापिष्ठो व्यसनी ऋणैरुपहतो द्यूतप्रियो भिक्षुको
रोगी पुंस्त्वविवर्जितश्चलमतिर्वैदेशिकः कातरः ।
मूर्खो दुष्टकुलोद्भवश्च कृपणो वृद्धोऽतिदीनः खलः
कर्तव्यो न वरः कदाऽपि पुरुषैरेवंविधो भूतले ॥ ८ ॥

अथ विवाहभेदसमुद्देशः ।

चातुर्वर्ण्यसमाहिता मुनिवरैरष्टौ विवाहाः स्त्रियो
ब्राह्मो दैवतकस्ततो निगदितौ गान्धर्वपैशाचकौ ।
आर्षो राक्षसकस्तथाऽऽसुर इति ख्यातोऽपरश्चाष्टमः
प्राजापत्यसमाभिधः पृथगमी प्रोक्ता मया नामतः ॥ ९ ॥
आर्षो दैवतकः प्रजापतिभवो ब्राह्मो द्विजानां मतो
गान्धर्वः सह राक्षसेन कथितः क्षात्रस्य तज्ज्ञैरसौ ।
एकश्चासुरसंज्ञको निगदितो वैश्यस्य शूद्रस्य च
सङ्क्षेपादुपवर्णितं क्रमवशात्पौराणिकं लक्षणम् ॥ १० ॥

---

१ ‘प्रख्यातोभयवंशजो’ ग. । २ ‘कथितः कुले’ ग. ।

विद्यावान् गुणपूजितः सुचरितः सद्वंशजातो मुनिः
सौम्यो मानरतः सुशीलविनयो गेहागतः प्रार्थकः ।
कन्याया, गृहनायकः सपुलकस्तस्मै ददात्यादरा-
दार्षो गोयुगदक्षिणो निगदितस्तज्ज्ञैर्विवाहो वरः ॥ ११ ॥
ऋत्विग्भिः परिमण्डिते बहुविधे यज्ञोत्सवे चोत्तमे
नानावर्णसुवर्णवस्त्रकुसुमैराभूषिताङ्गी शुभा ।
कन्या दक्षिणया द्विजाय विधिना यद्दीयते चादरा-
द्दैवः सोऽयमुदीरितः कविवरैरित्थं विवाहो वरः ॥ १२ ॥
कन्या बान्धवसन्निधौ सुललिता विप्रोत्तमायादरा-
दुक्त्वा–तुभ्यमियं मया स्वतनया दत्तेति हर्षान्वितौ ।
धर्मं सञ्चरतां यथासुखमुभौ दाम्पत्ययोगात्सदा
प्राजापत्यकरग्रहः कविवरैरेषः प्रमाणीकृतः ॥ १३ ॥
आहूयार्चनपूर्वकं द्विजवरायाच्छाद्य वासोवरै-
र्विद्याशीलविवेकवंशविनयाचारान्विताय स्वयम् ।
कन्या प्रीतिमते वराय विधिना यद्दीयते सादरं
ब्राह्मोऽसौ मुनिपुङ्गवैर्निगदितः श्रेष्ठो विवाहोऽपरः ॥ १४ ॥
कन्या यौवनशालिनी पतिममुं या स्वीकरोति स्वयं
गान्धर्वः स हि कथ्यते, भुजबलादाकृष्यते यत्पुनः ।
ज्ञेयो राक्षस एष पण्डितवरैश्चौर्याद्विवाहोऽपरः
पैशाचः कविशेखरेण कथितस्त्याज्यः सदा यत्नतः ॥१५॥
आदाय प्रथमं वराद्बहुतरं शुल्कं यथाकाङ्क्षया
वस्त्रालङ्कृतिवैभवेन तनयासन्तोषमुत्पाद्य च ।
पश्चाद्दुष्कुलसम्भवाय मलिनं कन्याप्रदानं वृथा
प्रख्यातोऽधमवंशजापरिणयस्तज्ज्ञैरसावासुरः ॥ १६ ॥

अथ परदारत्यागसमुद्देशः ।

अश्रद्धामुपहास्यतां मलिनतामर्थक्षयं लाघवं
गर्हां ग्लानिमधोगतिं विकलतामायुःक्षतिं दुर्गतिम् ।

इत्थं ये परदारकर्मणि रता लोकत्रये निन्दिता
विन्दन्ते परमापदः सुखधिया दुःखं नरास्ते सदा ॥१७॥
पौलस्त्यः सुरदैत्यमर्त्यमुकुटव्याघृष्टपादाम्बुजो
मैथिल्याहरणादवाप मरणं वालिश्च्युतो राज्यतः ।
पाञ्चालीप्रतिकाङ्क्षितेन निधनं भीमाद्गतः कीचक-
स्तस्मादन्यवधूर्नरैर्न मनसाऽप्यालापनीया भुवि ॥ १८ ॥

अथ दूतीसमुद्देशः ।

चक्षुःप्रीतिरुदीरिता प्रथमतश्चित्तभ्रमः स्यात्ततः
सङ्कल्पस्तदनन्तरं निगदितो निद्राविनाशस्तथा ।
वैराग्यं विषयेषु कार्श्यमथ च व्रीडानिवृत्तिस्ततो
ह्युन्मादो मरणं दश(नव)प्रकटिताः कन्दर्पचेष्टा इति ॥१९॥
कामिन्या नवयौवने न मिलति स्वेच्छाविहारो नृणा-
मुन्मादो मरणं तदा मनसिजव्यामोहतो जायते ।
तस्मात्तद्विनिवारणाय पुरुषैरन्याङ्गना कामिभि-
र्गन्तव्येति वदन्ति काश्यपमुनिक्षेमेन्द्रवात्स्यायनाः ॥२०॥
तारापीडसुतो विनाशमगमत्कादम्बरीकाङ्क्षया
व्यामुक्तः किल पुण्डरीकमुनिरप्युच्चैर्महाश्वेतया ।
उर्वश्या च पुरूरवा नरपतिः सन्त्याजितो जीवितं
तस्माज्जीवितरक्षणाय हि विनिर्गम्या परप्रेयसी ॥ २१ ॥
दासी वारवधूर्नटी च विधवा बाला च धात्री तथा
कन्या प्रव्रजिता च भिक्षुवनिता सम्बन्धिनी शिल्पिनी ।
मालाकारनितम्बिनी प्रतिसखी दौत्ये स्मृता योषिता-
मालापे कविभिः सदैव मदनव्यापारलीलाविधौ ॥ २२ ॥

अथ सुखसाध्यासमुद्देशः ।

प्रौढा कान्तविमानिता बहुगुणा रम्याऽनपत्या तथा
रण्डा स्वैरपरा स्वतन्त्रगमना शिल्पप्रिया गायिका ।

---

१ 'वालिश्च तारार्थतः' ग. ।

षण्ढोन्मत्तदरिद्रसेवकमहारोगार्तडिम्भाङ्गना
नूनं सिद्ध्यति दूतिकानिगदिता रम्याभिसारोत्सवे ॥२३॥

अथ कष्टसाध्यासमुद्देशः ।

एका वल्लभरक्षिता परजनालापे विरक्ता दृढा
निःस्नेहा धनयौवने गुरुजनाद्भीता च लज्जावती ।
स्वस्था सुन्दरनायका पतिरता शिष्यादिकान्ता तथा
दुःसाध्या कविशेखरेण रमणी प्रोक्ता रतिप्रार्थने ॥ २४ ॥

अथ त्याज्यस्त्रीसमुद्देशः ।

अज्ञाता द्विजवल्लभा गुरुवधूर्मित्राङ्गना रोगिणी
चेटी प्रव्रजिता सती रिपुवधूः शिष्या च गर्भान्विता ।
भ्रूणघ्नी मृतसन्ततिः खलजना चास्पृश्यजा गोत्रजा
गन्तव्या न कदाचिदेव पुरुषैरेताः स्त्रियः कामिभिः ॥२५॥

सुरतत्याज्यस्थानसमयसमुद्देशः ।

नद्यां देवगृहे चतुष्पथवटे शैलस्य सानौ जले
गुर्वग्निद्विजसंनिधौ परगृहे दुर्गे[1] श्मशाने वने ।
सन्ध्यायां दिवसे कदाऽपि सुरतं पुम्भिर्विवेकान्वितै-
र्दृष्ट्वा धर्मविरोधसङ्कटमिति त्याज्यं सदा यत्नतः ॥ २६ ॥
अष्टम्यां हिमरश्मिशेखरतिथौ बाणे च पूर्णातिथौ
भानोः संक्रमणे व्रते च शरदि ग्रीष्मे क्षपायामपि ।
यातायातपरिश्रमे ज्वरगदे संभोगचेष्टां नरः
कुर्यान्नैव कदाचिदेव सुकृतीत्याहुर्मुनीन्द्राः स्फुटम् ॥ २७॥

अथ सुरतयोग्यस्थानसमुद्देशः ।

स्फूर्ज्जद्दीपशिखोज्ज्वले सुललिते रम्योन्नते विस्तरे
धूपोद्गारमनोहरे कुसुमस्रग्दामोपशोभान्विते ।
वीणातालरवाकुले मनसिजप्रस्तावनानन्दिते[2]
सम्भोगः कुशलैः स्वकीयभवने कार्यो यथाकाङ्क्षया ॥२८॥

---

१ 'गोष्ठे' ख. । २ 'मनसिजप्रस्तावनापण्डितैः' ख. ।

अथाभिलाषसमुद्देशः ।

उक्ता गच्छति लज्जिता विरमति प्रेम्णा मनागीक्षते
केशाँल्लुञ्चति जृम्भणं रचयति प्रस्तौति गाथां मुहुः ।
आलिङ्गत्यपरां विरौति परुषं चुम्बत्यसौ बालकं
गात्रं भञ्जति जृम्भते विहसति प्रत्युत्तरं याचते ॥ २९ ॥

दोर्मूलं खलुदर्शयेत् स्तनयुगे वस्त्रं समालम्बते
अङ्गुष्ठेन लिखेन्महीं स्मितमुखी व्रीडां विधत्ते मृषा ।
दन्तेनाधरपल्लवं विदशति व्यक्तं तथा भाषते
भावैरेभिरिह स्फुटं मृगदृशां ज्ञेयोऽभिलाषः सदा ॥ ३० ॥

अथालिङ्गनसमुद्देशः ।

माल्यापूरितकुन्तलः सुवसनः स्निग्धाङ्गरागोज्ज्वलो
नानाभूषणसुन्दरः स्मरवशस्ताम्बूलपूर्णाननः ।
स्फूर्ज्जद्दीपमनोज्ञवासभवने शय्यातले नायको
रागार्थं परिरम्भणं प्रथमतः कुर्यात्समं योषिता ॥ ३१ ॥

वृक्षारूढकसंज्ञकं प्रथमतस्तस्माल्लतावेष्टितं
तस्माज्जाघनविद्धकावपि मतावूरूपगूढं पुनः ।
ज्ञातव्यं तिलतण्डुलं रसविदामालिङ्गनं योषितां
क्षीरं नीरपुरःसरं निगदितं तस्माच्च लालाटिकम् ॥ ३२ ॥

एकेन पादेन पदं स्वभर्तुरन्येन चाक्रम्य तदूरुभागम् ।
आपीड्य दोर्भ्यामपि कान्तपृष्ठं वृक्षाधिरूढं प्रवदन्ति तज्ज्ञाः॥३३॥

ऊर्ध्वं भुजोभ्यां सरलाङ्गयष्टी क्षोणीरुहं वल्लिरिवाऽधिरुह्य ।
नारी प्रियं चुम्बति निस्तरङ्गा भवेल्लतावेष्टितसंज्ञकं तत् ॥३४॥

श्रोणीतटे बाहुयुगेन कान्तमापीड्य मुक्ताम्बरकेशभारा ।
वक्त्रासवं स्वादयति प्रहृष्टा तज्ज्ञैः स्फुटं जाघनमेतदुक्तम् ॥३५॥

सुखोपपिष्टं पुरुषं पुरन्ध्री सम्मीलिताक्षं स्वकरप्रबन्धात् ।

१ 'स्फूर्जद्दीपमनोजसद्मनि वरे' इति पा० । २ 'भुजाभ्यामवलम्ब्य या स्त्री' ग. । ३ 'सुरतप्रसङ्गात्' ग. ।

आविध्यति प्रेमलसत्कुचाभ्यामालिङ्गनं विद्धकमेतदाहुः ॥३६॥
कान्तो मनोजव्यथिताङ्गयष्ट्या आपीडयेदूरुयुगं युवत्याः ।
ऊरूपघातेन कविप्रवीरैरूरूपगूढं तदिदं प्रदिष्टम् ॥ ३७ ॥
बाहूरुवक्षोजघनेन गाढमन्योन्यसंसक्तशरीरयष्ट्योः ।
आनन्दभावाद्यदुदीर्णभावमालिङ्गनं तत्तिलतण्डुलाख्यम् ॥३८॥
गात्रोपरिष्टादथ तल्पमध्ये संलीयते[1] यन्मिथुनं शरीरे ।
कामातिरेकात् कृतपूर्णचेष्टमालिङ्गनं क्षीरजलं प्रदिष्टम् ॥ ३९ ॥
अन्योन्यसंसक्तमुखं च बाहू नेत्रं ललाटं हृदयं कपोलम् ।
आनन्दभावश्रममीलिताक्षं[2] लालाटिकं तत्त्वविदो वदन्ति ॥४०॥

अथ चुम्बनसमुद्देशः ।

गण्डस्थलीमस्तकदन्तवासोग्रीवाकुचोरःस्तनचूचुकानि ।
अलिङ्गनानन्तरमेव यूनोः स्थानानि चुम्बस्य वदन्ति तज्ज्ञाः ४१
कक्षायुगं चापि नितम्बिनीनां कन्दर्पगेहं च रतिप्रवीणाः ।
चुम्बन्ति कामं तरलायताक्ष्या देशस्य सात्म्येन सदैव लाटाः ४२
कान्तोऽङ्गनाया वदने स्वकीयं वक्त्रं समारोप्य बलेन यत्र ।
न चुम्बति क्रोधवशेन नारी स्याच्चुम्बनं तन्निमिताभिधानम् ४३
पत्युर्मुखे स्वीयमुखं निवेश्य प्रेम्णा मनागश्चति दन्तवासः ।
उच्चेन गृह्णात्यपि कम्पितोष्ठी प्रोक्तं मुनीन्द्रैः स्फुरितं विनोदात् ४४
हस्तेन नेत्रं परिमील्य भर्तुः सम्मीलिताक्षी वदने स्वजिह्वाम् ।
निक्षिप्य च क्रीडति यत्र लोला ख्यातं रसज्ञैः खलु घृष्टसंज्ञम् ४५
हस्ताङ्गुलीसंपुटकेन यत्र कान्तोष्ठमादाय रसज्ञया च ।
आस्वादयेन्निर्दशनं विनोदात् स्याच्चुम्बनं पीडितमेतदेव ।४६।
कान्ताधरं स्वाधरसंपुटेन पीत्वा मुहुः स्वादयति क्रमेण ।
नारी च तेनैव विधानकेन ज्ञेयं मुनीन्द्रैरिति संपुटाख्यम् ॥४७॥
ओष्ठेन कान्तोष्ठयुगं निपीय जिह्वां निधायाप्यथ तालुभागे ।
चुम्बोत्सवे नृत्यति यत्र नारी प्रोक्तं समौष्ठं मुनिभिः पुराणैः ४८

---

१ 'संनीयते' ग. । २ 'आनन्दभावावनिमीलिताक्षौ' ग. ।

अथ नखाघातसमुद्देशः ।

कक्षाकुचोरःस्थलकुक्षिनाभिश्रोणीललाटाङ्घ्रिकरेषु सद्यः ।
साङ्गुष्ठसर्वाङ्गुलिकैश्च सर्वैः सुव्यक्त एषः स्तनकन्धरादौ ॥४९॥
संज्ञापकं मन्मथरागराशेरुक्तं मुनीन्द्रैश्छुरिताभिधानम् ।
वक्षोजकन्दर्पगृहाधरेषु देयं नवोढाप्रमदाजनानाम् ॥ ५० ॥
कण्डूयनेनैव शिरोरुहाणामस्योपयोगं परिकीर्तयन्ति ।
अर्धेन्दुसङ्काशमिदं नखज्ञैरर्धेन्दुसंज्ञं कथितं समासात् ॥ ५१ ॥
कक्षानितम्बस्तनपार्श्वकेषु दातव्यमेतत् करजं सदैव ।
अर्धेन्दुसंज्ञद्वितयं प्रयुक्तं स्यान्मण्डलाख्यं मदनाव्रतंसम् ॥ ५२ ॥
ऊरूतटे कामगृहे नितम्बे प्रोचुर्मुनीन्द्रा विनियोगमस्य ।
समैश्च सर्वैर्नखरैः सुलग्नैस्तज्ज्ञैः किलोक्तं शशकप्लुताख्यम् ॥५३॥
सीमन्तपार्श्वे हृदि चूचुकादावेतत् प्रयोज्यं सुरतप्रयोगे ।
सर्वैर्नखैर्वै स्तनमध्यभागे पश्चादधोऽङ्गुष्ठभवा हि रेखा ॥ ५४ ॥
व्यक्तीकृता रागकरी तदेतन्मयूरपादं समुदीरयन्ति ।
अलम्बमेवं स्फुरिताधरेखं प्राहुः क्षतं पङ्कजपत्रसंज्ञम् ॥ ५५ ॥
दोर्मूलवक्षःस्थलनाभिसंधावस्योपयोगं वदते महेशः ।
रेखायुगं गण्डयुगे प्रदत्तं स्तनान्तकक्षाजघनस्थलेषु ।
देशान्तरं गच्छति कामिनीनां संस्मारकं दर्दुरकं वदन्ति ॥५६॥
पुंसः शरीरे युवतीकुचे वा क्षतं नखस्य प्रतिवीक्ष्य सद्यः ।
कन्दर्परागाकुलचित्तवृत्तिर्मुनेरपि स्यात् किमुतेतरस्य ॥ ५७ ॥
सर्वस्वमेवास्ति मनोभवस्य प्रेम्णा प्रयुक्तं करजं रतज्ञैः ।
नाऽस्माद्द्वितीयं भुवि रागबीजमित्याह शीतांशुकलाकिरीटः॥५८॥

अथ दशनघातसमुद्देशः ।

दन्तप्रकाराश्च नखप्रकारैर्ज्ञेयाः समा एव समैश्च सद्भिः ।
शीत्कारहुङ्कारविचेष्टिताद्याः प्रायो विशेषाः पुनरत्र कार्याः ५९

---

१ '०कुचोरुस्थल०' इति क. ।

श्लथा घनास्तीव्रमुखाः समाङ्का रागस्पृशो निर्मलदीप्तिभाजः ।
दन्ता प्रदेया नखदानदेशे वक्त्रान्तराक्षिद्वितयं विहाय ॥ ६० ॥
दन्तौष्ठसंयोगवशेन गण्डे दन्तप्रकारः किल विद्रुमोऽयम् ।
अभ्यासयोगाद्युवतीजनानां स्यान्नान्यथा काऽपि विनोदतस्तु ६१
ऊरूस्थले कण्ठकपोलयुग्मे खण्डाभ्रकं मण्डलतुल्यरूपम् ।
संशोभते दन्तमिदं युवत्याः प्रायो मुनीन्द्राः समुदीरयन्ति॥६२॥
दीर्घा सुरक्ता क्षतकुञ्चिता च रेखा स्थले चूचुकयोः प्रदेया ।
विशेषकाले स्मरणे च तज्ज्ञैर्दन्तोऽयमुक्तः किल कोलचर्चः(र्वः)६३

अथ केशाकर्षणसमुद्देशः ।

द्वाभ्यां कराभ्यां शिरसि प्रकामं कृष्ट्वा कचांश्चुम्बति वल्लभश्चेत् ।
तदेव दिष्टं समहस्तसंज्ञं स्यादेकहस्तेन तरङ्गरङ्गः ॥ ६४ ॥
कर्णप्रदेशे च कचं निपीड्य प्रेम्णा पतिश्चुम्बति वल्लभास्यम् ।
अन्योन्यहस्तग्रहविस्तरेण कामावतंसं मुनयो वदन्ति ॥ ६५ ॥
संवेष्ट्य सर्वाङ्गुलिभिः कचौघं यस्याः पतिर्धारयति स्मरार्ताम् ।
भुजङ्गवल्ली परिकीर्तितेयं रतोत्सवे केशकलाविधिज्ञैः ॥ ६६ ॥
भव्या घना रौक्ष्यविवर्जिताश्च श्यामा विशाला बहुलाः कचाः स्युः।
चुम्बप्रदानावसरे प्रकृष्या रागोदयार्थं तरुणीजनानाम् ॥ ६७ ॥
इत्यादयो बाह्यरतप्रकाराः पूर्वं रतज्ञैः परिकल्पनीयाः ।
अन्येऽपि ये सन्ति बहुप्रभेदा नोक्ता मया विस्तरभीतितस्ते ६८

इति श्रीकविशेखरज्योतीश्वरविरचिते पञ्चसायके चतुर्थः सायकः ।

---

## अथ पञ्चमः सायकः ।



अथ नाडीसमुद्देशः ।

मनोभवागारमुखे तु नाड्यस्तिस्रो भवन्ति प्रमदाजनानाम् ।
समीरणा चान्द्रमसी च गौरी विशेषमासामुपवर्णयामि ॥ १ ॥

---

१ ' वल्यः ' ग. ।

प्रधानभूता मदनातपत्रे समीरणा नाम विशेषनाडी ।
तस्या मुखे यत्पतितं नृवीर्यं तन्निष्फलं स्यादिति चन्द्रमौलिः ॥२॥
या चापरा चान्द्रमसी च नाडी कन्दर्पगेहे भवति प्रधाना ।
सा सुन्दरी योषितमेव सूते साध्या भवेदल्परतोत्सवेन ॥ ३ ॥
गौरीति नाडी यदुपस्थदेशे प्रधानभूता भवति स्वभावात् ।
पुत्रं प्रसूते बहुधाऽङ्गना सा कष्टोपभोग्या सुरते प्रदिष्टा ॥ ४ ॥

अथोत्तानबन्धसमुद्देशः ।

प्रसारितोरुद्वयमध्ययोगाद्गाढाऽपि नारी श्लथतामुपैति ।
संलग्नजानुद्वयबन्धयुक्ता श्लथाऽपि सङ्कोचमलं प्रयाति ॥ ५ ॥[1]
तस्या युवत्याः प्रकृतिं च सत्त्वं देशं च भावं मदनातपत्रम् ।
आलोक्य बन्धाः परिकल्पनीयाः सम्भोगकाले पुरुषै रसज्ञैः ॥६॥[2]
उत्तानसुप्तप्रमदोरुमध्ये स्थितः पतिः कामयते प्रकामम् ।
तयोर्द्वयोः प्रीतिकरः प्रदिष्टो बन्धो नराणामतिदुर्लभोऽयम् ॥७॥
उत्तानसुप्ता युवतिः स्वपादौ स्कन्धे समारोप्य रमेन्नरस्य ।
बन्धोऽयमुक्तः समपादसंज्ञः प्रयोजनीयः करिणीरतेषु ॥ ८ ॥[3]
एवंविधायाः स्त्रिय एव जङ्घां कान्तः स्वजङ्घोपरि सन्निवेश्य ।
उद्भ्रम्य भूयः कटिमारमन्त्याः स्यादेष बन्धः किल नागराख्यः ।९।
धृत्वा स्वजानुं गगने स्वपादौ शय्यातले स्त्री प्रथमं प्रसुप्ता ।
कुचौ पतिः पाणियुगेन धृत्वा रमेत्तदा व्योमपदाभिधानम् । १० ।[4]
एकं युवत्याश्चरणं पृथिव्यामूर्ध्वं तथाऽन्यं परिकल्प्य कान्तः ।
पैद्भ्यां स्थितो हस्तयुगं च भूमौ त्रैविक्रमः स्यादिति बन्धराजः ११

नितम्बबिम्बं किल नायकेन
नार्यास्त्रिकं हस्तयुगेन धृत्वा ।

---

१ 'संकोचमुपैति नूनम्' ग. । २ 'रतिज्ञैः' इति । ग. । ३ 'तरुणीरतेषु' इति पाठान्तरम्' । ४ 'पाणितलेन' इति ग. । ५ 'कट्यां' ग. ।

गुल्फौ निधाय स्थित एव तस्या
बन्धोऽप्यसौ चाटुककेलिकः स्यात् ॥ १२ ॥
कान्तस्य वक्षःस्थलगौ च (स्व)शादा-
वालिङ्ग्य गाढं प्रमदा कराभ्याम् ।
किञ्चिन्नतोरुद्वययोगतश्च
ज्ञेयो बुधैरित्यवदारितोऽयम् ॥ १३ ॥

अथ पार्श्वबन्धसमुद्देशः ।

एकं युवत्या हृदये स्वपादं तथाऽर्पितं तल्पगतं तदन्यम् ।
प्रौढाङ्गनावल्लभ एष बन्धः ख्यातः पृथिव्यामुपवीतिकाख्यः १४
ऊर्वोः पतिर्मध्यगतो युवत्याः पार्श्वस्थितायाः परिरभ्य देहम् ।
यूनोस्त्रिकालोलनतो रसज्ञैरत्यादृतः सम्पुटनामधेयः ॥ १५ ॥
पार्श्वस्थितायाः मृगशावकाक्ष्याः पृष्ठावलम्बी रमणः प्रसुप्तः ।
लिङ्गस्मरागारनिवेशयोगादिहोपदिष्टः खलु नागबन्धः ॥ १६ ॥

अथोपविष्टबन्धसमुद्देशः ।

पद्मासनं संपरिकल्प्य भर्ता क्रोडोपविष्टां युवतिं रमेच्च ।
अन्योन्यकण्ठार्पितबाहुयोगात् पद्मासनाख्यं प्रवदन्ति सन्तः।१७।
कान्तो नितम्बस्थित एव नार्याः श्रोणीं कराभ्यां यदि याति धृत्वा।
आस्फालयेद्वाऽपि कटिप्रबन्धात् प्रोक्तो मुनीन्द्रैरिति कीर्तिबन्धः१८

अथाधोमुखबन्धसमुद्देशः ।

अधोमुखस्थां रमयेच्च नारीं [1]तत्पृष्ठवर्ती पशुतुल्यरूपः ।
भर्ता परिक्रीडति भावहीनो निर्दिश्यते हारिणबन्ध एषः ॥१९॥
दन्तावलच्छागतुरङ्गमाणां क्रीडाप्रकारैश्च भवन्ति बन्धाः ।
इत्थं रसज्ञैरनुलापनीया नोदाहृता विस्तरभीतितस्ते ॥ २० ॥

ऊर्ध्वबन्धसमुद्देशः ।

अन्योन्यदोःपञ्जरमध्यजातः स्तम्भो यदा बाहुयुगेन लग्नः ।
निष्पीड्य नारी पतिमूर्ध्वसंस्थं रमेत्तदा व्यात्[3]तकरं वदन्ति॥२१॥

---

१ 'तत्पृष्ठवर्ती' ग. । २ 'उत्पृष्ठवर्ती' ग. । ३ 'व्यायतकं' क. ।

एको युवत्या यदि कान्तहस्ते जानुस्थितः स्यादपरः पृथिव्याम् ।
कान्तं कराभ्यामुपगूह्य यत्स्याज्ज्ञेयं रसज्ञैः करणं त्रिपादम् ॥२२॥

अथ पुरुषायितसमुद्देशः ।

अधोमुखी कान्तहृदि प्रसुप्ता दोर्भ्यां समालिङ्ग्य यदि प्रयाति ।
गा(प्रौ)ढाङ्गनावल्लभ एष तज्ज्ञैः बन्धः प्रदिष्टो विपरीतरूपः॥२३॥
धूर्त ! त्वमेवं विजितोऽस्यकस्माद्युद्धे मया पञ्चशरस्य नारी ।
इत्यादिकं भूरिविधं रटन्ती प्रायः सुखं विन्दति केलिरङ्गे॥२४॥

विपरीतरतावयोग्यां स्त्रियं दर्शयति ।

नैवप्रसूता[1] ऋतुयोगयुक्ता गर्भालसा स्थूलतनुर्नताङ्गी ।
क्षीणा नवोढा ज्वरिता च नारी वर्ज्या रतिज्ञैर्विपरीतबन्धे ॥२५॥

अथ सन्ताडितसमुद्देशः ।

वामस्वाभावान्मदनस्य रागो हस्तप्रहारात्समुपैति वृद्धिम् ।
तस्माद्यथास्थानमसौ विधेयो वराङ्गनायाः सुरतावसाने ॥२६॥
यद्यङ्गना कान्तहृदि प्रहारं मुष्ट्या भजन्ती सुरतोपचारैः ।
सन्ताडितं नाम वदन्ति तज्ज्ञा विस्तीर्णहस्तेन तदा पताकम् २७
साङ्गुष्ठमध्याङ्गुलसम्प्रहारात् सञ्जायते कुण्डलनामधेयः ।
यः केवलाङ्गुष्ठभवोऽभिघातः प्रोक्तः कवीन्द्रैः स तु बिन्दुमालः २८

द्रवति यदि न नारी प्रौढरागार्तियुक्ता
मृदुनिधुवनयोगे दन्तसन्धौ सलीलम् ।
पिबति दशनवासः किञ्चिदुन्मुच्य भूयः
कथितमिह रसज्ञैः सीत्कृतं रागकारि ॥ २९ ॥
पिकशिखिकलहंसप्रायपक्षिव्रजानां
ध्वनितमनुकरोतीत्यङ्गना मन्मथार्ता ।
मुखदशनविवर्तात्तत्कवीन्द्रा वदन्ति
स्तनितमिति समासाच्चित्रसम्भोगकाले ॥ ३० ॥

---

१ ‘ अल्पा प्रसूता ’ इति क. ।

एवंविधकरणस्य फलं निरूपयति ।

इत्यादियोगैः पृथुकामभावं सम्पाद्य नारीपुरुषौ चिरेण ।
जातानुरागौ रहसि प्रकामं सौख्यं समास्वादयतो महीयः ॥३१॥

अष्टनायिकासमुद्देशः ।

यस्याः पतिर्मिलति केलिकथानुरक्तः
पार्श्वं न मुञ्चति मनोभववेगयुक्तः ।
स्यात्सुन्दरी सकलसौख्यकलानिधाना
स्वाधीनपूर्वपतिकेति वदन्ति तज्ज्ञाः ॥ ३२ ॥

पुष्पाङ्गरागरुचिरा तरुणी प्रियस्य
तिष्ठत्यनागमनहेतुविचारलोला ।
एषाऽबला न हि चिरं परिदेवनीया
सोत्कण्ठितेति कथिता कविभिः पुराणैः ॥ ३३ ॥

स्रक्चन्दनाम्बरविभूषणभूषिताङ्गी
या वल्लभागमनमार्गविरूढदृष्टिः ।
तल्पं गता रुचिरवासगृहेऽवशेते
सा कीर्तिता जगति वासकसज्जितेति ॥ ३४ ॥

क्रोधात्प्रयाति चरणे पतितोऽपि कान्तः
प्रायः प्रचण्डवचनाच्चरणैर्निरस्तः ।
पश्चात्तदीयविरहक्षरदानताङ्गी
सा कीर्तितेह कलहान्तरिता कवीन्द्रैः ॥ ३५ ॥

सङ्केतकं प्रियतमः स्वयमेव दत्त्वा
नैवागतः समुचिते समये च यस्याः ।
दृष्टा वचोऽमृतरसैः सकलाङ्गयष्टिः
सा वर्णिता कविवरैरिह विप्रलब्धा ॥ ३६ ॥

प्रातर्विनिद्रवदनस्मरभारचौरो
निद्रालसोऽलसगतिर्नखविक्षताङ्गः ।

यस्याः प्रयात्यभिमुखं मुहुशो युवत्याः
सा खण्डितेति कथिता कविभिः पुराणैः ॥ ३७ ॥
आरम्भभग्नचरिता विकला च नारी
या निर्मिता हि मदनेन मदेन यादि ।
गुप्ताभिसाररसिका परवेश्म गन्तुं
सा कीर्तिता कविवरैरभिसारिकेति ॥ ३८ ॥
देशान्तरं प्रतिवसद्रमणश्च यस्या
दत्त्वाऽवधिं चिरतरं गुरुकार्ययोगात् ।
दुर्वारदुःखदहनैः परिवेदिताङ्गी
सा प्रोषितप्रियतमा कथिता मुनीन्द्रैः ॥ ३९ ॥

ग्रन्थोपसंहारः ।

यावच्चन्द्रकलाकिरीटहृदये शैलाधिराजात्मजा
यावद्वक्षसि माधवस्य कमला सानन्दमादीव्यति ।
यावत्कामकलाविवर्तचटुलं क्षोणीतलं राजते
तावच्छ्रीकविशेखरस्य कृतिनः काव्यं मुदे दीव्यताम् ॥४०॥

इति कविशेखरश्रीज्योतीश्वराचार्यविरचिते पञ्चसायके पञ्चमः सायकः ।

---

समाप्तश्चायं ग्रन्थः ॥



# पञ्चसायकस्य पाठसंशोधनम् ।

| पृ. | पं | अपपाठः | सुपाठः |
|---|---|---|---|
| २ | १९ | कुटीलेक्षणा | कुटिलेक्षणा |
| ३ | ३ | लज्जाविहोनानना | लज्जाविहीनानना |
| १० | २० | वङ्गीगौडी | वङ्गगौडी |
| १४ | २ | पूतकरञ्जबीजैः | पूतिकरञ्जबीजैः |
| २० | २४ | चामुण्डमन्त्रः | चामुण्डामन्त्रः |
| २२ | १६ | क्षीरोदनं | क्षीरौदनं |
| २४ | ६ | ०वासरास्ते | ०वासवास्ते |
| ३० | ७ | अङ्गुष्ठेन | ह्यङ्गुष्ठेन |
| ,, | २१ | ०ऽधिरुद्य | ०ऽधिरुह्य |
| ३१ | १२ | अलिङ्गना० | आलिङ्गना० |
| ,, | २६ | पुगणैः | पुराणैः |
| ३४ | २२ | नायकेन | नायकस्तु |
| ३५ | १२ | पार्श्वस्थितायाः | पार्श्वस्थिताया |
| ३६ | १२ | वामस्वाभावा० | वामस्वभावा० |

# 'गुजराती न्यूस' मुद्रणालये मुद्रितानि क्रय्यसंस्कृतपुस्तकानि ।

१ दानमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः। अत्र दानसामान्येतिकर्तव्यता, मण्डपादिलक्षणम्, रजतादितुलाविधिः, दानानि दानप्रयोगाश्च विस्तरेण निरूपिताः। मू. रु. ... ... मू. रु. आ. पै. २—०—०

२ उत्सर्गमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः। अत्र वापीकूपतडागारामाणामुत्सर्गविधिः कथितः। मू. रु. ... ०—३—०

३ प्रतिष्ठामयूखः— ... ... ... ... ०—६—०

४ विशिष्टाद्वैताधिकरणमाला—पञ्चनदीयपण्डितसुदर्शनाचार्यविरचिता। अत्र अथशब्दस्यानन्तर्यपरत्वमतःशब्दस्य च कर्मज्ञानवृत्ततापरत्वं, हिरण्यगर्भादिजीवानां परमेश्वरनिरासः, योगमतनिरासः, ब्रह्मणः प्रपञ्चोपादानत्वं च, सृष्टौ वैषम्यं कर्मापेक्षम्, पशुपतिमतनिरासः, भागवतमतसंस्थापनम्, सर्गादिव्यापारहीनं मुक्तैश्वर्यम्, इत्यादयो विषया रामानुजमतेन सम्यङ्निरूपिताः। मू. रु. ... ... १—०—०

५ विष्णुसहस्रनाम—(मूलं स्थूलाक्षरं) रेशमी बाइंडिंग ... ०—४—०
,, ,, साधें ,, ... ०—२—०
,, ,, कापडी ,, ... ०—३—०

६ विष्णुसहस्रनाम गुजराती भाषांतर—साधें बाइंडिंग ... ०—२—६
,, ,, कापडी ,, ... ०—४—०
,, ,, रेशमी ,, ... ०—५—०

७ विष्णुसहस्रनामयुतस्तोत्रपंचरत्नं—(स्थूलाक्षरं) साधें बाइंडिंग ०—३—०
,, ,, ,, कापडी ,, ... ०—४—०
,, ,, ,, रेशमी ,, ... ०—५—०

८ सत्यनारायणपूजाकथा हिंदीभाषाटीकासहित—
,, गुजरातीभाषाटीसहित—

९ गणेशसहस्रनामावलिः—ग्लेज ... ... ... ०—३—०

१० विष्णुसहस्रनामावलिः— ,, ... ... ... ०—३—०

११ शिवसहस्रनामावलिः— ,, ... ... ... ०—३—०

१२ देवीसहस्रनामावलिः— ,, ... ... ... ०—३—०

१३ कुमारसम्भवकाव्यम्— ... ... ... १—८—०

१४ रघुवंशः आदितः पंचसर्गाः मल्लीनाथीटीका ... ... ०—६—०

# आयुर्वेदीयग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः।



**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः, तथा **रससंकेतकलिका**—कायस्थचामुण्डवैद्यविरचिता, एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते। द्वितीयं संस्करणम्, मूल्यं २ रूप्यकौ.

**गदनिग्रहः**—श्रीशोढलवैद्यविरचितः। अस्य प्रयोगखण्डात्मकः प्रथमो भागः। अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति। द्वितीयं संस्करणम्। मूल्यं २ रूप्यकौ.

**गदनिग्रहस्य द्वितीयो भागः**—कायचिकित्सा-शल्य-शालाक्य-भूततन्त्र-कौमारभृत्यागदतन्त्र-रसायन-वाजीकरण-पञ्चकर्मविध्याख्यनवखण्डात्मकः। मूल्यं ४॥ रूप्यकाः।

**आयुर्वेदप्रकाशः**—उपाध्यायश्रीमाधवविरचितः। द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ।

**क्षेमकुतूहलं**—श्रीक्षेमशर्मविरचितः पाकशास्त्रग्रन्थः। मूल्यं १२ आणकाः।

**रसरत्नाकरान्तर्गतश्चतुर्थो रसायनखण्डः**—श्रीनित्यनाथसिद्धविरचितः। मूल्यं ८ आणकाः।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, **नाडीपरीक्षा** श्रीरावणकृता, **वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः**, एतद्ग्रन्थचतुष्टयमेकत्र बद्धमेवोपलभ्यते। द्वितीयं संस्करणम। मूल्यं १॥ रूप्यकः।

**रसपद्धतिः**—श्रीविन्दुविरचिता, श्रीमहादेवविरचितटीकया सहिता, तथा **लोहसर्वस्वं**—श्रीसुरेश्वरविरचितम्। एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते। मूल्यं १॥ रूप्यकः।

**रसकामधेनुः**—श्रीचूडामणिवैद्यसंगृहीता। उपकरणपाद-धातुसंग्रहपाद-रसक्रियापादेतिपादत्रयात्मकः प्रथमो भागः। ६००. पृष्ठात्मकः। मूल्यं ९ रूप्यकाः।



प्रापणभृतिस्तु सर्वेषां ग्राहकैरेव देया भवेत्।



प्राप्तिस्थानम्
**"गुजराती न्यूस" प्रिन्टींग प्रेस,**
**नं. २०—२४, बेक-हाउस लेन, कोट मुंबई.**

